# ॥ मुचुकुंदकृत कृष्णस्तुतिः ॥

**श्रीमुचुकुंद उवाच**

विमोहितोऽयं जन ईश मायया
त्वदीयया त्वां न भजत्यनर्थदृक् ।
सुखाय दुःखप्रभवेषु सज्जते
गृहेषु योषित्पुरुषश्च वंचितः ॥ १ ॥

लब्ध्वा जनो दुर्लभमत्र मानुषं
कथंचिदव्यंगमयत्नतोऽनघ ।
पादारविंदं न भजत्यसन्मतिः
गृहांधकूपे पतितो यथा पशुः ॥ २ ॥

ममैष कालोऽजित निष्फलो गतो
राज्यश्रियोन्नद्धमदस्य भूपतेः ।
मर्त्यात्मबुद्धेः सुतदारकोशभू–
ष्वासज्जमानस्य दुरंतचिंतया ॥ ३ ॥

कलेवरेऽस्मिन्घटकुड्यसन्निभे
निरूढमानो नरदेव इत्यहं ।
वृतो रथेभाश्वपदात्यनीकपैः
गां पर्यटंस्त्वागणयन्सुदुर्मदः ॥ ४ ॥

प्रमत्तमुच्चैरिति कृत्यचिंतया
प्रवृद्धलोभं विषयेषु लालसं ।
त्वमप्रमत्तः सहसाभिपद्यसे
क्षुल्लेलिहानोऽहिरिवाखुमंतकः ॥ ५ ॥

पुरा रथैर्हेमपरिष्कृतैश्चरन्
मतं गजैर्वा नरदेवसंज्ञितः ।
स एव कालेन दुरत्ययेन ते

कलेवरो विट्कृमिभस्मसंज्ञितः ॥ ६ ॥

निर्जित्य दिक्चक्रमभूतविग्रहो
वरासनस्थः समराजवंदितः ।
गृहेषु मैथुन्यसुखेषु योषितां
क्रीडामृगः पूरुष ईश नीयते ॥ ७ ॥

करोति कर्माणि तपः सुनिष्ठितो
निवृत्तभोगस्तदपेक्षया ददत् ।
पुनश्च भूयासमहं स्वराडिति
प्रवृद्धतर्षो न सुखाय कल्पते ॥ ८ ॥

भवापवर्गो भ्रमतो यदा
भवेज्जनस्य तर्ह्यच्युत सत्समागमः ।
सत्संगमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते मतिः ॥ ९ ॥

मन्ये ममानुग्रह ईश ते कृतो
राज्यानुबंधापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया
वनं विविक्षद्भिरखंडभूमिपैः ॥ १० ॥

न कामयेऽन्यं तव पादसेवना–
दकिंचनप्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे
वृणीत आर्यो वरमात्मबंधनं ॥ ११ ॥

तस्माद्विसृज्याशिष ईश सर्वतो
रजस्तमःसत्त्वगुणानुबंधनाः ।
निरंजनं निर्गुणमद्वयं परं
त्वां ज्ञाप्तिमात्रं पुरुषं व्रजाम्यहं ॥ १२ ॥

चिरमिह वृजिनार्तस्तप्यमानोऽनुतापै–
रवितृषषडमित्रोऽलब्धशांतिः कथंचित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्
अभयमृतमशोकं पाहि मापन्नमीश ॥ १३ ॥

॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे एकपंचाशततमेऽध्याये श्री मुचुकुंदकृत कृष्णस्तुतिः संपूर्णः ॥